अभिनवगुप्तप्रणीतः

# तन्त्रालोकः

जयरथकृतविवेकव्याख्योपेतः

सम्पादकौ

डा० रामचन्द्र द्विवेदी

डा० नवजीवन रस्तोगी

ग्रंथाङ्कः ५

आह्निकानि १०—१४

मोतीलाल बनारसीदास

दिल्ली वाराणसी पटना मद्रास

# THE
# TANTRĀLOKA
# OF ABHINAVAGUPTA

*with the Commentary of Jayaratha*

Edited by
Dr. R. C. DWIVEDI
and
Dr. NAVJIVAN RASTOGI

VOLUME V
*Sanskrit Text ; Chapters* 10-14

MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

# विषयानुक्रमणिका
## Table of Contents

### दशमाह्निकम्


| | | कारिका-संख्या |
|---|---|---|
| १ | तत्त्वभेदनिरूपणप्रतिज्ञा | १ |
| २ | त्रिकशास्त्रप्रामाण्यात् शक्तिमच्छक्तिभेदेन तत्त्वानां पाञ्चदश्यादिरूपाणां नवभेदान्तराणाम् आसूत्रणम् | २–५ |
| ३ | शक्तिशक्तिमतां चतुर्दशत्वम् | ६ |
| ४ | शक्तिमतां मूलतः नर-शक्ति-शिवात्मकत्वम् | ७–८ |
| ५ | भूमेः स्वं स्वरूपम् | ९ |
| ६ | भुवः पञ्चदशात्मकत्वे शक्तिमत्तच्छक्तीनां चतुर्दशविधत्वस्य नैमित्यम् | १०–११ |
| ७ | सकलादिप्रमातृसप्तकस्य तत्प्रमाणांशतया सप्तशक्तीनां च निरूपणम् | १२–१७ |
| ८ | प्रमातृसप्तकस्य द्विधात्वं तद्भेदस्य वेद्यभेदकत्वञ्च | १८ |
| ९ | वस्तुधर्माख्यप्रमेयासूत्रणे वेद्यतायाः भाववपुस्तया ज्ञानस्य प्रमात्रतिशयतया च निरूपणम् | १९–२० |
| १० | वेद्यता विषयधर्मं इति कौमारिलमतप्रतिक्षेपः | २१–२६ |
| ११ | संवित्समुद्भवरूपतया प्रतिषेधाद् वेद्यतायाः पदार्थधर्मताऽभावे पदार्थानाम् अवेद्यत्वापत्तिः | २७–२८ |
| १२ | अत्रार्थे दृष्टान्तः | २९–३० |
| १३ | तन्मते अर्थप्रकाशने समग्रायाः सामग्र्या अप्रकाशनरूपत्वात् सर्वान्ध्यप्रसङ्गः | ३१–३२ |
| १४ | प्रदीपवज्ज्ञानस्यार्थप्रकाशकत्वे अर्थप्रकाशयोः सामानाधिकरण्य-समुच्चय-संबंधरूपपक्षत्रयस्य पूर्वपक्षतयोट्टङ्कनम् | ३३–३५ |

१५ तत्र तृतीयपक्षे कर्तृषष्ठ्यां पररूपोपग्रहात्मदूषणं कर्मषष्ठ्याञ्च ण्यर्थावस्थानम् ३६
१६ चेतनेन जडस्य जडान्तरस्य वा संबंधे एव णिजन्तस्य मुख्यार्थत्वं जडेन तु औपचारिकत्वम् ३७–४४
१७ उपचारस्य सनिमित्तकत्वाद् अर्थे ज्ञानस्याकिंचित्करत्वात् ण्यर्थे प्रकाशत्वोपचारस्य अपारमार्थिकत्वम् ४५–४९
१८ उपचारस्यापि चेतनाश्रितत्वाद् भवन्मते आत्मनः स्वतोऽचेतनत्वाद् उपचारासिद्धिः ५०–५१
१९ ज्ञानान्तरवेद्यत्वेऽपि ज्ञानस्य प्रदीपवद् अर्थप्रकाशकत्वे मुख्यामुख्यण्यर्थाऽसंगतिः ५२
२० प्रकृतार्थात् प्रदीपदृष्टान्तस्य वैषम्यम् ५३
२१ प्रकारान्तरेण वैषम्यद्रढनम् ५४
२२ अतः शिवप्रकाशार्थयोरैकात्म्याद् वेद्यतायाः पदार्थस्ववपुस्त्वं भावांशपृष्ठगामित्वञ्च ५५–५६
२३ प्रकटतासंवित्तिपक्षयोः परस्परेण संधानादत्र वेद्यतायाः भावधर्मत्वे उभयोरपि संग्रहः ५७
२४ दृष्टान्तद्वयोपादानाद् वेद्यत्वस्य अर्थक्रियाभेदोपदर्शनं ज्ञानसंवित्तित आधिक्यप्रदर्शनञ्च ५८–६०
२५ वेद्यताधर्मणः भावस्य शिवैकरूपत्वात् सर्ववेद्यत्व-रूपदोषानवकाशः ६१-६२
२६ प्रमातृप्रमेययोस्तत्त्वतो भेदेऽपि एतद्दोषानवकाशः ६३
२७ अत्रार्थे युक्तिः ६४–६५
२८ न्यायास्मन्मतयोः साम्यवैषम्यप्रदर्शनपूर्वकम् अस्मन्मते प्रमातुः तत्तदर्थावभाससंभिन्नसंविदात्मकत्वाद् वेद्यताख्यभावधर्मस्य नियतप्रमातृवेद्यत्वे पर्यनुयोगानवकाशः ६६–६७
२९ एतदवमन्यमानस्य परस्य बधिरप्रायत्वम् ६८–६९
३० एकप्रमातृवेद्यतायाः प्रमात्रन्तरसंबंधाभाववद् वेद्यतान्तरसंबंधस्यापि अनुपपत्तिः ७०–७४
३१ वेद्यतायाः स्वप्रकाशविश्रान्तौ वेद्यत्वाभावः ७५–७६

३२ प्रकाशविश्रान्तिसतत्त्वाया अपि वेद्यतायाः
शिवस्वातन्त्र्याद् भेदेन भासनाद् भावधर्मत्वसिद्धिः ७७-७८
३३ एकरूपत्वेऽपि तत्तदंशांशिकाक्रमेणावभासमानाद् वेद्यत्वस्य
सकलादिप्रमातृगतत्वेन चातुर्दश्यादिक्रमकल्पनाया औचित्यम् ७९—८२
३४ प्रमातृभेदाद् वेद्यताभेद इतिसमर्थनार्थम् अर्थक्रियाभेदनिरूपणम् ८३—८४
३५ तत्रापि नृत्तादौ अनेकप्रमातृवेद्यत्वात् तावत्यंशे प्रमात्रैक्यम् ८५—८६
३६ प्रमात्रैक्याच्चमत्कारानुभूतिः ८७
३७ ततः एकप्रमातृवेद्यस्य नीरसत्वम् अनेकप्रमातृवेद्यस्य सरसत्वम् ८८
३८ श्रीमालिनीविजयोत्तरप्रामाण्याल्लोकवत् शास्त्रेऽपि
वेद्यत्वस्य प्रमात्रन्तरापेक्षया विचित्रार्थकारित्वम् इति भावस्य
वेद्यताधर्मोपसंहारः ८९—९१
३९ वेद्यताया अनाभासयोगे आभासस्य स्वालक्षण्यम् ९२
४० उपाध्ययोगात् घटमात्रस्य स्वरूपेण भाने स्वपरवेद्यता-
संभेदपरामर्शरहितत्वम् ९३—९५
४१ शुद्धवस्तुप्रकाशने प्रकाशमानत्वाद् वेद्यत्वं न तु वेद्यत्वेन
प्रकाशमानत्वम् ९६
४२ एवं सकलप्रमातारं प्रति वेद्यत्वाद् धराद्यव्यक्तान्त-
पाञ्चदश्यादिकल्पनायाः वास्तवत्वम् ९७
४३ अव्यक्तान्तं सकलस्य प्रमातृत्वोक्तौ मायाकञ्चुकानाम्
अनुद्रेकाद् ध्वंसाच्च प्रलय-विज्ञानाकलयोर्संग्रहः ९८—१००
४४ वेद्यप्राधान्येऽपि कञ्चुकोद्रेकात सकलस्य प्रमातृत्वाद् अस्य
पाञ्चदश्यसिद्धिः १०१
४५ प्रलयाकलप्रमातरि अस्य त्रायोदश्यम् १०२
४६ श्रीमालिनीविजयोत्तरे सकलतच्छक्त्यधिकारेण चतुर्विंशतौ
तत्त्वेषु चतुर्दशधारणानामभिधानम् १०३—१०४
४७ प्रलयाकलानां प्रमातृत्वे पुंसादिकलान्ततत्त्वषट्कस्य त्रायोदश्यं
विज्ञानकलानामेकादशत्वं मन्त्राणां च नवधात्वम् इति
पूर्वोक्तानुवादः १०५—११२
४८ एवं मन्त्रमहेश्वरे प्रमेयतामापन्ने अप्रमेयभूतस्य शिवस्य प्रमातृत्वम् ११३

४९ अप्रकाशात्प्रकाशत्वेऽनवस्थादोषात् शिवस्य स्वप्रकाशत्वं विश्वस्य प्रमात्रधीनप्रकाशत्वम् ११४–११५
५० आदिसिद्धत्वात्तस्य प्रमाणानां तदधीनसिद्धित्वम् ११६
५१ उपदेश्यत्वेन सृष्टत्वाद् वेद्यत्वप्रसङ्गे शिवस्य मन्त्रमहेश्वरादिदशासादनम् ११७–११८
५२ तथात्वे शिवप्रत्यवमर्शाभावात् शिवभावनावैयर्थ्यापत्तिः ११९
५३ शिवात्मताऽपरित्यागात्तस्य वेद्यभावेऽपि शिवभावनावैफल्याभावः १२०
५४ श्रीपूर्वशास्त्रे शिवस्य भेदनिषेधेऽपि भूमिकान्तरप्राप्त्या न भेदाऽसङ्गतिः १२१
५५ एवं शिव-मन्त्र-महेशादीनां भेदानन्त्यम् १२२–१२३
५६ प्रलयाकलादेश्च प्रोक्ते त्रायोदश्यादिभेदे सकलवद् अकलादिके स्फुटभेदाभावाद् यथोत्तरं प्रतिप्रमातृ भेदद्वयाधिकत्व-संभावनायामपि प्रलयाकलादेः प्रलयाकलान्तरादिवेद्यत्वाभावे संख्याधिक्यानभिधानाद् भावधर्मवेद्यतामूलस्य पाञ्चदश्यस्योप-पादनम् १२४–१३१
५७ क्रमेण भावनादिबलात् मन्त्रत्व-संसरणहेतुभ्यां स्वातन्त्र्य-वर्जितत्वाच्च प्रबोधस्य द्वैविध्यात् प्रलयविज्ञानाकलयोर्वेदितृत्वाद् वेद्यतायाः भावधर्मत्वम् १३२–१३८
५८ विज्ञानाकले संसारस्य विज्ञानि-योगितया अवतारार्थकत्वे श्रीपूर्वशास्त्रसंवादः १३९
५९ अनयोर्बोधयोग्यतायाः हेतोः पाञ्चदश्यादिक्रमे वेद्यतायाः योग्यतारूपत्वम् १४०
६० तत्र निदर्शनम् १४१
६१ प्रलयाकलाद्यवस्थायां वेद्यतायाः भोक्तृतायाश्च योग्यतामात्र-निबन्धनत्वात् प्रलयाकलादौ तत्तद्भोक्त्रौचित्येन भोगवैचित्र्योपपत्तिः १४२–१४४
६२ मूढामूढदशायां योग्यतामात्रेण भोक्तृभोग्यभावे दृष्टान्तद्वयमुत्तरत्र दृष्टान्तान्तरेण पोषश्च १४५–१४८
६३ तत्त्वभेदोपसंहारः १४९

६४ शक्तिशक्तिमद्भेदादेव समुद्भूताद् भेदोपभेदगणनायाः निरवधित्वात् पाञ्चदश्यादावेव विश्रान्तिः १५०
६५ पार्थिवत्वेऽपि रौद्रवैष्णवलोकयोर्भोगवैचित्र्यनिदर्शनपुरःसरं शक्तिशक्तिमद्भेदाद् भुवनवैचित्र्यविस्तारस्य दिङ्मात्रेणाभिधानम् १५१–१५३
६६ शक्तिशक्तिमतामन्योन्यं भेदाद् अवान्तरभेदानाम् एकोनपञ्चाशत्त्वम् १५४
६७ अवान्तरभेदानामपि अन्योन्यं भेदने धरादेकद्वित्रादि-क्रमेण भेदने च भेदानन्त्यम् १५५–१५७
६८ सकलस्य चक्षुरादिशक्तिभिरुद्भवतिरोभावाभ्यां भेदान्तराधानम् १५८
६९ प्रलयाकलादौ एवमेव भेदान्तराधानम् १५९
७० शक्तेस्तिरोभावोद्रेकयोः वेद्यतायाः क्रमेण अनावेशावेशाभ्याम् अर्थक्रियौचित्याद् भेदान्तरोदयः १६०–१६१
७१ अत्रान्वयव्यतिरेकगर्भः दृष्टान्तः १६२
७२ चक्षुरादिशक्तेस्तिरोभावोद्भवयोः भेदानन्त्यम् १६३
७३ एवं धरादिगतैकैकघटादिभावस्य भेदानन्त्यम् १६४
७४ अत्रापि वेद्यतायाः वेद्यवेदकतादात्म्यरूपत्वम् १६५–१६६
७५ घटादौ तत्त्वाश्रयतया आगमगर्भस्य पाञ्चदश्यस्य सामस्त्येन अभिधानावसरे पृथिव्याः ब्रह्मत्वं मन्त्रमहेश्वराणां च शिवेच्छया प्रेरकत्वम् १६७–१६९
७६ मन्त्राणां चात्र प्रेर्यत्वे क्रमेण विज्ञानाकलत्वं सौषुप्ते तत्तत्तत्त्वविलयदर्शनात् प्रलयाकलत्वम् १७१–१७३
७७ स्मृतिवैचित्र्यदर्शनात् सौषुप्ते निखिलवेद्यविलयाभावः १७४
७८ स्मृतेश्च तूलसुखादिस्पर्शजन्यत्वखण्डनम् १७५–१७६
७९ धरायां सकलानां त्रिमलबद्धत्वम् १७७
८० प्रमातृसप्तकनिरूपणानन्तरम् इच्छा-ज्ञान-क्रियाणां शुद्धाशुद्धत्वात् स्वव्यापारकल्पने प्रक्षोभस्य शक्तिसप्तकतया निर्देशः १७८–१८१
८१ पाञ्चदश्यादिक्रमेऽपि विश्वस्य त्रिकात्मत्वम् १८२

८२ जलादि-मन्त्रमहेशान्तेषु सर्वभेदेषु पाञ्चदश्यादिसद्भावेऽपि अस्फुटत्वात् तच्चर्चनाऽभावः १८३–१८४
८३ श्रीपूर्वशास्त्रप्रामाण्याज्जाग्रदादिवत् पाञ्चदश्यादेरपि उपर्युपरि अवस्थानम् १८५
८४ श्रीशम्भुवचनादन्तःप्राणे तत्त्वाध्वनि पाञ्चदश्याद्यभिधानोपक्रमः १८६
८५ तत्र तुटीनां षोडशत्वं तस्य च षोडशक्षणरूपत्वं सपादाङ्गुलद्वययुक्प्राणचाररूपत्वञ्च १८७
८६ तत्र आद्यद्वयोः शिवशक्तिरूपत्वम् अन्त्यद्वयोः पृथगविभावनात् ग्राह्यरूपत्वम् १८८-१८९
८७ अवशिष्टतुटिद्वादशके परषट्के विकल्पाच्छादनत्वम्, परापरषट्के विकल्पात्मत्वं ग्राह्योपरागत्वञ्च, उभयत्र उन्मेषनिमेषवृत्तिभ्यां देवीत्रयस्य षट्त्वम् १९०–१९४
८८ आद्यषट्के स्वातन्त्र्योल्लासाद् देवीनां पररूपादच्युतावपि उत्तरोत्तरम् अतिशयः १९५–१९६
८९ पञ्चदशीतुटेः ग्राह्य-ग्रहीतृपक्षयोरन्यतरविनिक्षेपादत्रैव मतद्वये प्रागुक्तस्वपक्षस्य स्वसंवेदनसिद्धत्वावेदनम् १९७–१९८
९० प्राणगतपाञ्चदश्यप्रक्रियोपसंहारः १९९
९१ भेदन्यूनत्वात् त्रायोदश्याद्युपदेशे विकल्पस्य ह्रासोऽविकल्पस्य स्फुटत्वम् २००
९२ तत्र दृष्टान्तः २०१–२०२
९३ अविकल्पस्य अवधेयत्वम् २०३
९४ अविकल्पविश्रान्त्या सर्वेप्सितफलसंपत्तौ आगमोपज्ञत्वम् २०४
९५ द्वादशतुटीनां द्वि-द्विक्रमेण न्यूनीभवनाच्छिवे तुटिद्वयरूपत्वावशेषे एकस्याः पूर्णत्वमन्यस्याः सर्वज्ञानक्रियात्मत्वमिति न निर्विभागताहानिः २०५–२०६
९६ द्वितीयायामवहितस्य सर्वज्ञत्वसर्वकर्तृत्वलाभे श्रीकल्लटप्रामाण्यम् २०७–२०८
९७ आद्यतुटौ पूर्णत्वाद् वेद्य-कार्ययोरनवकाशाद् द्वितीयस्याः

तुटेरेव प्राथमिकीभेदकलात्वं प्रतिभात्वं तृतीयादितुटीनां
मन्त्रमहेश्वरादितयोदयश्च २०९–२११
९८ तृतीयादितुटिष्वहितस्य स्वयमेव तत्तत्सिद्ध्युपजननेऽपि
भेदबहुत्व-दूरत्वाभ्यां न सर्वज्ञत्वाद्युदयः २१२–२१३
९९ एवं संविन्नैकट्यात् शिवस्यान्तिकपदव्यपदेशः तत्प्राप्तौ
भावनादिप्रयत्नानवकाशः २१४–२१५
१०० अत्रार्थे संप्रदायधनानां प्रामाण्यम् २१६
१०१ विप्रकृष्टे एव यत्नयोगस्यौचित्ये दृष्टान्तः २१७
१०२ चिद्रूपतोन्मेषनिमेषाभ्यां सन्निकर्षे आन्तरत्वं विप्रकर्षे
बाह्यत्वमिति देशकालाभ्यां विप्रकर्षाभावात् क्रमिकत्वाभावे
संविदः पारिपूर्ण्यम् २१८–२२१
१०३ सर्वकारणत्वात्संविदः स्वभावविप्रकर्षाभावः २२२
१०४ अतएव घटस्फुरितप्राणवृत्तेरपि शिवबीजलयत्वम् २२३
१०५ शिवाभेदात् मन्त्रमहेशादीनामपि कारणत्वम् २२४
१०६ एवंविवेचने सर्वस्यैव भैरवीभावः २२५
१०७ प्राणगतभेदस्येदृक्प्रतिपादने शाम्भवाज्ञानुविधायित्वम् २२६
१०८ एकैकप्रमातुर्वैचित्र्यस्य अवस्थापदव्यपदेश्यत्वम् २२७
१०९ एकवेदकाधिकारेणैव तत्त्वपद्धतौ अवस्थापदानां
जाग्रदादिपञ्चत्वप्रदर्शने शंभुनाथोपज्ञत्वम् २२८–२३०
११० मातृमेयमानप्रमात्मकवेद्यचतुष्टयस्य अधिष्ठेयत्वे
जाग्रदवस्था २३१–२३३
१११ अन्तःबाह्यनीलयोर्क्रमेण बोधकबोध्यरूपत्वाद्
अधिष्ठात्रधिष्ठेयविभागे अधिष्ठेयस्य जाग्रदवस्थात्वम् २३४–२३५
११२ अबुद्ध-बुद्ध-प्रबुद्ध-सुप्रबुद्धतया अधिष्ठेयचातुर्विध्यम् २३६
११३ जाग्रतः पिण्डस्थत्वम् २३७
११४ जाग्रद्-बुद्धादिचतुष्कस्य प्रत्येकं संकीर्णत्वं तुर्यातीतस्य
सर्वत्रानुस्यूतत्वञ्च २३८
११५ अत्रार्थे श्रीश्रीपूर्वशास्त्रसंवादः २३९
११६ अधिष्ठेयचतुष्के प्रमेयस्य मुख्यं जाग्रत्त्वम् २४०

११७ अस्यैव पिण्डस्थपदाभिधाने श्रीमालिनीमतप्रामाण्यम् २४१

११८ लोक-योग-प्रसंख्यानवशाज् जाग्रतः जाग्रत्-पिण्डस्थ-
सर्वतोभद्रेति पारिभाषिकसंज्ञात्रयम्, स्वप्नादौ एतदतिदेशश्च २४२–२४६

११९ मेयच्छायावभासिन्याः मानप्रधानाया अवस्थायाः मुख्यं
स्वप्नत्वम् २४७

१२० अबाह्यरूपतासाम्यात् स्वप्नस्य वैकल्पिकार्थत्वम् २४८

१२१ तत्र वैकल्पिकार्थस्य स्पष्टास्पष्टतया स्वप्नजागरात्वनिरूपणम् २४९

१२२ स्पष्टाधिष्ठातुः विकल्पान्तरगमविस्पष्टस्य स्वप्नस्वप्नत्वे
मुख्यं स्वप्नरूपत्वम् २५०

१२३ तदेव सर्वप्रमातृसाधारण्यास्थिरत्वाभ्याम् अबाह्यताबोधः २५१

१२४ प्राग्वत्स्वप्नेऽपि गतागत-सुविक्षिप्त-संगत-सुसमाहिततया
अवस्थाचातुर्विध्यम् २५२

१२५ लोक-योग-प्रसंख्यानवशादत्रापि स्वप्न-पदस्थ-व्याप्तीति
पारिभाषिकसंज्ञाभेदः २५३–२५५

१२६ स्वप्नस्य मानप्राधान्यात्मकत्वम् २५६

१२७ जागरा-स्वप्नप्रमातुरेव भावग्रहणाभावात् सौषुप्तम् २५७–२५८

१२८ तत्साम्याल्लोकेऽपि गाढनिद्रायाः मुख्यतया सुषुप्ताभिधानम् २५९–२६०

१२९ योग-प्रसंख्यानवशादत्रापि रूपस्थ-महाव्याप्तीति
संज्ञान्तरम् २६१–२६२

१३० प्राग्वदत्रापि उदित-विपुल-शान्त-सुप्रसन्नतया
अवस्थाचातुर्विध्यम् २६३

१३१ औदासीन्यन्यग्भावात् स्वरूपताग्रहोन्मुख्यस्य प्रमात्मकं
तुर्यत्वम् २६४–२६५

१३२ मेयादित्रितयस्य क्रमेण विश्रान्तेः विश्वप्राणभूतदेवी-
रूपत्वम् २६६–२६७

१३३ मेयादित्रयोपायसाध्यायाः तुर्यायाः प्रमातृत्वोन्मेषः २६८–२६९

१३४ तत्समावेशोपरागे प्रमादीनां यथायथं विप्रकर्षात्
तत्समावेशनैकट्ये उत्कर्षाद् अस्या अनामयत्वे सव्यापारत्वे च
आगमसंवादः २७०–२७१

१३५ स्वदर्शने शक्तित्वेन जाग्रत्स्वप्नयोरपरात्वम्, सुषुप्तस्य परापरात्वम् तुर्यस्य च परात्वम् २७२

१३६ प्राग्वद् योग-प्रसंख्यानवशादस्याः रूपातीत-प्रचयेति संज्ञाभेदः २७३–२७४

१३७ अत्रापि परस्परसाङ्कर्ये वेदित्रेकस्वभावात् त्रिकशासनप्रामाण्यात् मनोन्मना-ऽनन्त-सर्वार्थतया अवस्थात्रैरूप्यम् २७५–२७७

१३८ पूर्णानन्दवपुषः तुर्यातीतत्वम् २७८

१३९ योगादेरसद्भावान्नात्र प्राग्वत् संज्ञाभेदः २७९

१४० केवलप्रसंख्यानबलादस्य महाप्रचयसंज्ञित्वम् २८०

१४१ पूर्णत्वादत्र भेदस्य विशेषकत्वाभावात् श्रीपूर्वोक्तसततोदित-शब्दस्य सर्वव्यापित्वपरकत्वे भेदैककल्पनस्य मूढवादत्वम् २८१–२८३

१४२ अत्रार्थे श्रीपूर्वशास्त्रसंवादः २८४–२८६

१४३ जाग्रदादिवर्णने श्रीशंभुनाथोपज्ञत्वम् २८७

१४४ गुर्वन्तरदृशा जाग्रदादिनिरूपणप्रतिज्ञा २८८

१४५ तत्र जाग्रत्स्वप्नसुषुप्तानां क्रमेण स्थिरार्थविषयत्वम्, आत्मसंकल्पनिर्माणत्वम्, अवेदनरूपत्वम्, तथा च मलैकद्वयत्रययोगाद् सकल-प्रलयाकल-विज्ञानाकलप्रमातृत्वम् २८९–२९१

१४६ एतत्त्रयाणामेव तुर्ये मन्त्र-मन्त्रेश-मन्त्रमहेशादिरूपप्रमातृत्वं तुर्यातीते च निखिलभावजातस्य परसंविदैकात्म्यम् इति पाञ्चदश्यक्रमे जाग्रदादिवर्तनम् २९२–२९३

१४७ मतभेदेऽपि जाग्रदादीनां क्रमेण स्फुटा-ऽस्थिरा-ऽस्फुट-त्रयानुसंधिसूत्र-भेदगन्धाभावरूपत्वाद् सर्वत्र स्वरूपैक्यम् २९४–२९७

१४८ त्रायोदश्यादौ सर्वत्र एतदतिदेशः २९८

१४९ एवं शिवे एव चिदादिशक्तिपञ्चकस्य तुर्यातीताद्यवस्थापञ्चकत्वम् २९९–३००

१५० पाञ्चदश्यादिशिवैकान्तक्रमे पूर्वोक्तजाग्रदाद्यवस्थानिरूपणा-नुवादे श्रौतेनार्थेन च क्रमेण श्रीपूर्वशास्त्रवचनसंवादः ३०१–३०९

१५१ सविस्तरतत्त्वाध्वनिरूपणोपसंहारः

## एकादशमाह्निकम्

१ कलाध्वनिरूपणप्रतिज्ञा १
२ तत्त्वानां स्ववर्गानुगमस्य सूक्ष्मान्तःशक्तेर्वा कलात्वम् इति पक्षद्वयम २–४
३ पक्षद्वयेऽनुगमस्य नैयायिकवत्सामान्यत्वाभ्युपगमेऽनिष्टापत्तिः ५
४ दीक्षादिसौकर्यार्थं शिवकल्पितस्य समयाश्रितवर्गस्य
कलात्वमिति तृतीयः पक्षः ६
५ तत्र शिवकृतत्वाद् दूषणत्रयाभावः ७
६ पृथिव्याद्यण्डचतुष्टयस्य निवृत्त्यादिचतुष्कलासमव्याप्तिकत्वम् ८
७ शान्त्यतीतायाः शिवतत्त्वरूपत्वं परशिवस्य कलातीतत्वम् ९
८ स्वातन्त्र्याच्छिवतत्त्वेऽपि कलासङ्गतिः १०–११
९ आवरणत्वात् शक्त्यन्तमेवाण्डत्वम् अप्रतिघत्वाच्छिवे व्यापिन्यां
वा अण्डत्वाभावः १२–१३
१० गुरुवचनात् पृथिव्यादिपञ्चकस्य सर्वत्र व्याप्तेः
पञ्चत्रिंशत्तत्त्वात्मकप्रकृतिमायाशक्तिष्वपि अण्डत्वसद्भावे
अविप्रतिपत्तिः १४–१८
११ अत्रार्थे श्रीमत्कालोत्तरादिप्रामाण्यम् १९
१२ सद्योजातादीशानान्तपञ्चमन्त्रतनौ एषैव व्याप्तिः २०
१३ षट्त्रिंशशिवतत्त्वस्य अनावृतत्वे विश्वोत्तीर्णत्वात् परशिवस्य
सप्तत्रिंशत्वम् २१
१४ तदपेक्षया बोधमात्रस्य अष्टात्रिंशत्वम् २२
१५ वस्तुतस्तु शिवतत्त्वस्य षट्त्रिंशत्वेऽपि आगमार्थव्याचिकीर्षया
एवं परिकल्पने अनवस्थापरिहारः २३–२८
१६ धरायां गन्धः प्रकृत्यन्ते रसो मायान्ते रूपं शक्तौ तदन्ते च
स्पर्श इति सर्वत्र तन्मात्रव्याप्तिः २९–३१
१७ स्पर्शस्य स्पृहणीयत्वे श्रीस्पन्दप्रामाण्यम् ३२
१८ पृथिव्यादितत्त्वपञ्चकेन सकलतत्त्वव्याप्तौ श्रीपूर्वशास्त्र-
प्रामाण्यम् ३३
१९ पञ्चतत्त्वविध्युपसंहारः त्रितत्त्वविधेरभिधानम् ३४–३५

२० पञ्चतत्त्ववत् त्रि-नवा-ऽष्टादशतत्त्वविधीनामपि तत्त्वाध्वरूपत्वम् ३६–३७
२१ तत्तत्भोगेच्छाप्राधान्याद् भेदानन्त्यं तथात्वे न तत्त्वाध्वरूपताहानिः ३८
२२ सुप्रबुद्ध-मुमुक्षयोरपेक्षया समासतः दीक्षाभेदेन व्यासतः प्रोक्तस्यैकतत्त्वविधेरपि तत्त्वाध्वरूपत्वम् ३९–४१
२३ अध्वनः स्थूल-सूक्ष्म-परतया त्रैविध्ये मेयात्मनः पुर-तत्त्व-कलाध्वनोऽनन्तरं मातृभागस्थस्य त्रिविधस्य निरूपणोपक्रमः ४२–४३
२४ तत्र पदस्य अवगम-प्रक्षोभ-प्रमाणात्मकत्वं मन्त्रस्य अक्षोभा-ऽन्तःपरामर्श-प्रमातात्मकत्वञ्च ४४–४५
२५ अत्रार्थे त्रिकशासनप्रामाण्यम् ४६–४७
२६ परस्य वर्णाध्वनः क्षोभोपशम-स्वात्मविश्रान्तिप्रमारूपत्वम् ४८
२७ तत्त्वचतुर्विंशतेः एकैकवर्णत्वं शिवतत्त्वस्य च स्वरषोडशकत्वम् ४९
२८ पूर्वोक्तशक्तिपरिस्पन्दतया एतद्विभागोपपत्तिः ५०
२९ आर्यात्रयेण सकलषडध्वजातस्य संग्रहेणाभिधानम् ५१–५३
३० षडध्वनः बहीरूपत्वेन भासने स्वातन्त्र्यस्य नैमित्त्यम् ५४
३१ अक्षुब्धायाः संविदः प्रमातृत्वे मन्त्राध्वत्वं क्षुब्धायाः प्रमाणत्वे पदाध्वत्वम् ५५–५७
३२ संघट्टनस्य वर्णक्षोभात्मकत्वाद् भोगावेशमयत्वे स्वगुरूपदेशात् प्रमाणतारूपप्रमातृक्षोभोपरमः ५८–५९
३३ मेयस्य मानरूपतावेशे कलाध्वत्वं सूक्ष्मत्वे तत्त्वाध्वत्वं स्थूलत्वे च भुवनाध्वत्वम् ६०–६१
३४ परसंविदः सर्वार्थाभिधानसामर्थ्यं सर्वभावविश्रान्तिरूपत्वाद् वर्णाध्वनः प्रमारूपत्वम् ६२–६५
३५ तथात्वे स्वस्वातन्त्र्यानुवेधस्य असंकेतभाजां संकेतभाजां वा प्रमातृतावैचित्र्ये नैमित्त्यम् ६६–६७
३६ विकल्पस्य शब्दमूलत्वात् शब्दस्य च संकेतैकपरमार्थत्वात् संकेतान्तरापेक्षणेऽनवस्थापत्तेरमायीयवर्णग्रामस्य विश्रान्तिधामत्वम् ६८–७१

३७ अमायीयवर्णानां प्रमात्वम् ७२

३८ स्वप्रमाबोधादेव परवाक्यादौ बोद्धृत्वं स्वकीये कर्तृत्वञ्चेति सनिदर्शनमभिधानम् ७३–७५

३९ तत्रापि अकृतकप्रमातिरेकतारतम्यात् पूर्वपूर्वस्योत्तरोत्तरमज्जने शास्त्रकारित्व-कवित्व-वक्तृत्वादिशालित्वम् ७६–७८

४० परधाराधिरोहे सर्वज्ञत्व-सर्वकर्तृत्वसिद्धिः ७९

४१ तस्याः मूलसिद्धित्वात् वाक्सिद्धौ वर्णोपास्यताया उपदेशः ८०

४२ सङ्केतनिरपेक्षाणां मायीयवर्णवीर्यरूपत्वे श्रीसिद्धयोगीश्वरमतप्रामाण्यम् ८१

४३ अन्याध्वान्तर्भावेन एकाध्वशुद्धया षडध्वनः शुद्धिः ८२–८३

४४ अन्तर्भावे सूक्ष्माध्वशोधनादुत्तरसंततेरभावे क्रमान्तरत्वस्यापि अभिधानम् ८४

४५ षडध्वशोधनस्य क्रमेणाक्रमेण भोगदार्ढ्या-ऽधिकार-त्याग-शिवात्मवेदन-लय-निष्कृतिलक्षणत्वम् ८५-८६

४६ शुद्धेस्समन्त्रकत्वात् सिद्धान्त-वाम-दक्षादौ क्रमेण अनुत्तरत्रिके चाक्रमेण मन्त्राणां शोधकत्वम् ८७-८८

४७ अध्वनि सर्वेषां मन्त्राणां शोधकतयाऽवस्थाने श्रीपूर्वशास्त्रप्रामाण्यम् ८९

४८ द्वारादिमन्त्रान् विहाय सर्वेषामेव मन्त्राणामिह शोधकत्वम् ९०–९१

४९ अध्वमन्त्रयोर्शोधकशोध्यभावस्य शिवस्वातन्त्र्यात् प्रतिबिम्बवदुत्पत्तिः ९२–९३

५० बाह्यसमर्पकाभावात् चित्तत्त्वे संसारिणां रज्जुभुजगादिबुद्धिवदेषां प्रतिबिम्बत्वम् ९४

५१ उक्तदृष्टान्तपरीक्षणेन संविद्रूपताभासनपुष्टिः ९५–९६

५२ सर्वभावानां चित्तत्त्वसारत्वेऽपि मायादिकारणाद् अध्वमर्यादया वैचित्र्यम् ९७

५३ पूर्णरूपायाश्चित एव सर्वकर्तृत्वादत्र वैचित्र्येऽविप्रतिपत्तिः ९८–९९

५४ पूर्णायां चितौ भेदस्य अख्यातिप्राणत्वम् १००

५५ स्वप्नादौ कर्त्रन्तरासिद्धेः सर्वत्रैव संवित्कर्तृत्वसिद्धिः १०१

५६ संवित्कर्तृत्वे चित्तविश्रामणात् जीवनमुक्तिः १०२

५७ जन्मादौ कर्मादिनिमित्तान्तरस्यापि संविन्निर्मितत्वम् १०३

५८ संविन्मयतायामेव भूततन्मात्रादेराधाराधेयभावस्य संगतेः शिवमय्याः संविद एव धारकत्वम् १०४–१०७

५९ सांकल्पिकस्य वस्तुसतो वा विश्वस्य संविदाधारविश्रान्तिमन्तरेण तथाभानाऽभावः १०८–१०९

६० दिक्कालयोरपि देवसृष्टत्वाद् धराद्यर्थंजातस्य उदयव्यययोरमार्थिकत्वम् ११०–१११

६१ मायापदेऽपि देशकालयोरनियमः ११२

६२ अतः बहुक्रियायोगे नियतक्षणानस्तित्वात् क्षणिकत्ववादिनां निरासः ११३–११४

६३ बाह्यान्तर्भासने प्रभुसामर्थ्यस्य हेतुत्वम् ११५

६४ संविद्बाह्यपदार्थानुपपत्तिः ११६

६५ पूर्वोक्तत्वादेतदर्थस्य विस्तरेणेह विवेचनाभावः ११७

६६ कलादेरध्वनः विस्तृतविवेचनोपसंहारः ११८


# द्वादशमाह्निकम्


१ अध्वोपयोगप्रकाशनप्रतिज्ञा १

२ अध्वनः संविद्द्वारेण शून्यादिषु बहिः लिङ्गादिषु च व्यस्तसमस्ततया क्रमाक्रमतया चावस्थानम् २–३

३ एवमवस्थाने तत्तदध्वनि स्वस्य परशिवात्मकतासादनरूपं प्रयोजनम् ४

४ अनवच्छिन्नभासनेन देहादेः विश्वाध्वमयत्वम् ५–६

५ देहे घटादिषु सर्वत्र एवंभावनया मुक्तिलाभः ७–८

६ अत्रापि संविन्मयतापत्तौ अर्चन-ध्याना-ऽकम्पदार्ढ्यं-जप-होमादीनां नैमित्त्यम् ९–११

७ एवंकुर्वतः साम्यात्मकशुद्धव्रतत्वासादने नन्दिशिखाप्रामाण्यम् १२

८ अर्चनादिक्रमात् परिपूर्णस्थितेः समाधिरूपत्वम् १३

९ एवंविधेऽर्चनादीनां बहिरन्तर्द्वयावस्थाने बाह्यस्य अनुपयोगाद् विधिनिषेधाभावः १४
१० अत्रार्थे श्री त्रिकसूत्रप्रामाण्यम् १५
११ कथंचिदुपयोगादत्र बाह्यविधानमपि १६
१२ कम्पाख्यशङ्काह्रासोपायतया बाह्यविधौ यत्नौचित्यम् १७–१८
१३ अतः निषिद्धाचरणस्यापि अभिधानम् अत्रार्थे भर्गशिखाप्रामाण्यम् १९
१४ शङ्कायाः संसारबीजत्वम् २०
१५ संकराभावाच्छङ्कायाः वस्तुतोऽसत्त्वेऽपि तत्राविचिकित्सातः सुखमेव शङ्काविलयः २१–२२
१६ अत्रार्थे श्रीसर्वाचारादिशास्त्राणां संवादः २३
१७ तत्रत्यग्रन्थैकदेशोद्धरणम् २४
१८ अत्रार्थे श्रीमदुत्पलदेववचनात् माहेश्वरमार्गस्य शङ्कानिरासोपायत्वम् २५
१९ सविस्तराणवोपायनिरूपणस्य उपसंहारः २६

## त्रयोदशमाह्निकम्

१ परकीयमतानुवादपूर्वकं विविधशक्तिपातक्रमविषयक-स्वमतप्रदर्शनप्रतिज्ञा १–२
२ अव्यक्तमाययोः कार्यकारणभावादत्र सांख्याद् व्यतिरेकः ३–४
३ जडमायाया ईश्वरक्षोभितत्वं पुंसामपेक्षया तस्याः भोग्यत्वम् ५–६
४ कर्मसंस्काराभावात् मुक्ताणूनां भोग्यसृष्टेरभावः ७
५ क्रमाक्रमादुभयथापि भोगान्न कर्मक्षय इति मीमांसा-सेश्वरमीमांसयोर्खंडनम् ८–९
६ ज्ञानात्कर्मक्षयत्वेऽपि निमित्ताभावः १०–११
७ अत ईश्वरेच्छावशाज्ज्ञानस्य कर्मान्तरदाहकत्वम् १२
८ ज्ञानस्य कर्मान्तरदाहकत्वे युक्तिप्रामाण्यम् १३–१४
९ कर्मणः निष्फलीकरणे कर्मवादिनामप्यभ्युपगमः १५

१० अज्ञानस्य ज्ञानाभावरूपत्वे सर्वसंविदभावपक्षप्रतिक्षेपः १६–१७
११ एकतरज्ञानाभावपक्षप्रतिक्षेपश्च १८–१९
१२ मुक्ताणौ देहाद्यजन्मनः भाविज्ञानासंभवेऽज्ञानस्य प्रागभावरूपत्वाभावः २०–२२
१३ अत्र प्रध्वंसाभावस्यापि अन्याय्यत्वम् २३
१४ कर्मसचिवस्य अज्ञानस्य मिथ्याज्ञानरूपत्वे आकस्मिकहेतुत्व-स्वरूपसत्त्वरूपपक्षद्वयम् २४–२६
१५ प्रलयादौ देहाभावे मिथ्याज्ञानासंभवात् प्रथमपक्षप्रतिक्षेपः २७
१६ सकलकर्मणोऽज्ञानसहकृतत्वे कर्मप्रक्षयाभावाद् द्वितीयपक्षप्रतिक्षेपः २८–२९
१७ प्रलयादौ अणूनां चिद्रूपत्वे तज्ज्ञानस्य मिथ्यात्वयोगकल्पने मुक्ताणुशिवयोरपि मिथ्याज्ञानत्वापत्तिः ३०–३१
१८ नात्र सामान्येन अपितु सांख्यसम्मतस्य भोगापवर्गमय-साङ्कर्यवैविक्त्ययोगतः प्रकृतिपुरुषविवेकादर्शनात्मनोऽज्ञानस्य विवक्षा ३२–३६
१९ पुंधर्मतया नित्यचैतन्यत्वे, प्रकृतिधर्मतया नित्यनिर्मोक्षत्वे, उभयधर्मतया उभयदूषणोपनिपाते, भोगापवर्गाभावे सांख्यदृशाऽपि अज्ञानानुपपत्तिः ३७–४०
२० अज्ञानाद् बन्धमोक्षव्यवस्था ४१
२१ भेदहेतोरसंभावात् मायादिसद्भावेऽपि बन्धमोक्षविभागाभावः ४२
२२ एवंविभागे अज्ञानस्य चिदण्वावरणरूपत्वम् ४३
२३ आवरणात्मनोऽज्ञानस्य निरंशात्मकत्वमेकत्वञ्च ४४
२४ उत्पत्त्यभावादस्य नित्यत्वम्, नित्यत्वात् स्वपरसाधारण-त्वाच्च अविनश्वरत्वम् ४५–४७
२५ निमित्ताभावाद् अनेन आत्मनां संबंधस्य अनादित्वम् ४८
२६ अस्य आणवमलरूपत्वं मलान्तरकारणत्वञ्च ४९
२७ मलस्य रोद्‌ध्रीशक्तिनिवर्तने शिवशक्तिपातादणोर्ज्ञान-क्रिययोरभिव्यञ्जनम् ५०
२८ रोद्‌ध्र्याः औदासीन्यतारतम्याद्वैचित्र्यम् ५१
२९ निरोधशक्त्यौदासीन्यात्मनः मलपरिपाकस्य शक्तिपातशब्दव्यपदेश्यत्वम् ५२

३० परोक्तमलस्वरूपानुपपन्नत्वात् नवमाह्निकोक्तातिरिक्त-
प्रतिपादनसूचना ५३
३१ शक्तिपातस्य मलपाकत्वमलनाशत्वयोरसिद्धिः ५४–५८
३२ मलपाकस्य शक्तिप्रतिबन्धतयापि अनुपपत्तिः ५९–६०
३३ रोधिकाया अस्य शक्तित्वे सन्निधानासन्निधान-
रूपपक्षद्वयानुपपत्तिः ६१–६२
३४ मलस्य आत्मसमवेतज्ञानक्रिययोरावरणत्वे रूपनाशप्रसङ्गः ६३
३५ आवरणस्य अप्रकाशनार्थत्वे ज्ञानावरणासंभावः ६४
३६ मलतया पारिशेष्यादावरणस्य वस्तुशून्यत्वम् ६५
३७ पाकस्य स्वशक्तिप्रतिबन्धत्वे ईश्वरस्य निरपेक्षप्रतिबंधकत्वे
क्वाचित्कत्वस्यानुपपत्तिः ६६
३८ कर्मणामानुपूर्व्येण फलदानावस्थानात् कर्मसाम्यात्मनि कालक्षणे
ईश्वरस्य प्रतिबन्धकत्वप्रवृत्तेरनुपपन्नत्वम् ६७–७०
३९ भोगदकर्मनिरोधे परमेश्वरस्य निर्भयत्वम् ७१–७२
४० शक्तिपातचिह्नानुपलम्भात् कर्मसाम्यात्मककालक्षणे
ऐश्वरनिरोधस्य अनैकान्तिकत्वम् ७३
४१ पारमेश्वरे प्रतिबन्धकत्वे कालमाहात्म्यस्यापि सर्वसाधारण्य-
सर्वमुक्तिप्रसंगाद् अकिंचित्करत्वम् ७४–७५
४२ प्रतिनियताद् भोगक्रमादपि कर्मसाम्यस्य अवद्यत्वम् ७६
४३ जगद्वैचित्र्यकारणतया कर्मणोऽनवकल्पनम् ७७–७८
४४ कर्मवैचित्र्यस्य भोगलोलिकाजन्यत्वे तस्याः वैचित्र्ये
कर्मवासनावैचित्र्यस्य हेतुत्वेऽनवस्था ७९–८०
४५ कर्मवैचित्र्ये ईश्वरेच्छानैमित्त्याभावः ८१
४६ अनादिकर्मवासनायाः कर्मवैचित्र्यहेतुत्वान्मलकल्पनस्य वैयर्थ्यम् ८२–८४
४७ असति मले कर्मसाम्यस्य अकिंचित्करत्वम् ८५–८६
४८ तथात्वे बन्धमोक्षविभागोच्छेदः ८७
४९ मलाभ्युपगमेऽपि रुद्धकर्मणोरन्तरा कर्मान्तरप्रतिरोधात्
कर्मसाम्यासंगतिः शक्तिपातानवकाशश्च ८८
५० कर्मसाम्याभ्युपगमेऽपि अयत्नतः मोक्षसिद्धौ शक्तिपातानवकाशः ८९–९१

५१ कर्मान्तरस्य उत्तरकालं फलने निमित्ताभावः ९२

५२ निष्प्रतिबन्धरुद्धकर्मणोः तथात्वे प्रतिबन्धवर्जने नैमित्त्याभावः ९३

५३ कर्मसाम्यस्य शिवेच्छायाः वा शक्तिपातवैचित्र्ये
निमित्तत्वाभावः ९४

५४ एवमत्र तिरोभावस्याप्यनुपपत्तिः ९५

५५ तिरोभावे ईश्वरेच्छायाः तदनुषङ्गिकल्पनान्तराणाञ्च हेतुत्वे
पूर्ववद् वचनीयत्वम् ९६–९७

५६ वैराग्यादेरपि शक्तिपातहेतुत्वे पूर्ववद् दूष्यत्वम् ९८–९९

५७ वैराग्यादीनां समस्ततया व्यस्ततया वा ईश्वरापेक्ष्यत्वे
व्यभिचारादिदोषाः १००

५८ भेदवादिनां शक्तिपातविवेकानुवादतन्निराकरणोपसंहारः १०१

५९ स्वमतानुसारं शक्तिपातनिरूपणप्रतिज्ञा १०२

६० देवस्य स्वरूपाच्छादनक्रीडायोगादनेकत्वम् १०३

६१ आत्मनो बन्धमोक्षयोः स्वातन्त्र्यपरिकल्पितत्वम् १०४–१०५

६२ तथाप्रथनस्वभावस्य अपर्यनुयोज्यत्वाद् देवस्य
कुतस्त्व-कादाचित्कत्वादिशङ्कानिरवकाशः १०६–१०७

६३ शिवदृष्टौ परमेष्ठिगुरुवचनादात्मस्वरूपाभिव्यक्तौ
निमित्तान्तरान्वेषणप्रसङ्गाभावः १०८

६४ स्वरूपगोपनात्मनि अणुत्वे सति पुंसः भोगे
कर्मादिनिमित्तान्तरावकाशः १०९

६५ ऐश्वरीस्वात्मतिरोधित्साकार्यत्वात् कर्ममलयोरनादित्वम् ११०

६६ अपूर्णत्वेन पूरणौन्मुख्यात् मलस्य लोलिकात्वम् १११

६७ अत्रापि महेश्वरस्यैव हेतुत्वे सृष्ट्यादिकृत्यत्रये मल-कर्म-
मायापेक्षित्वम् अनुग्रहादिकृत्यद्वये तदनपेक्षित्वमिति विभागः ११२–११६

६८ शिवे भक्तिरेव शक्तिपातः इति भोगापवर्गसंधानाद् भक्तेः क्रमेण
कर्मापेक्षित्वानपेक्षित्वाभ्याम् अनुग्रहतारतम्यप्रकाशकत्वम् ११७–११९

६९ तिरोभावेऽपि परमेश्वरस्य मलादिनैरपेक्ष्यम् १२०

७० अत्रार्थे श्रीसारशास्त्रप्रामाण्याद् बद्धतया मुक्ततया वा प्रकाशने
सर्वत्र स्वात्मस्वातन्त्र्यहेतुत्वम् १२१-१२५

७१ श्रीमन्निशाकुलप्रामाण्यादपि मलकर्मणोरीश्वरे अकिंचित्करत्वम् १२६–१२७
७२ शक्तिपातस्य स्वेच्छामात्रपरिकल्पितत्वे
प्रमाणस्तुतिकृद्विद्यागुरोः संवादः १२८
७३ तीव्र-मध्यम-मन्देति त्रिविधस्य प्रत्येकं त्रैविध्ये शक्तिपातस्य
नवधात्वम् १२९
७४ तत्र तीव्रतीव्रे देहनिवृत्तिः स्वतस्त्वञ्च १३०
७५ मध्यतीव्रेऽज्ञाननिवृतिः ज्ञानस्य प्रातिभत्वञ्च १३१–१३२
७६ कर्मकर्तृभावतया शिष्टत्वं स्वयंभूशब्दव्यपदेश्यत्वञ्च १३३–१३४
७७ सर्वाविशेषेण प्रतिभोल्लासे तत्र दार्ढ्यकम्पभेदादानन्त्यम् १३५
७८ कम्पमानायां स्वयं युक्ति-शास्त्र-गुर्वादेरपेक्षणेन
दार्ढ्यापादनम् १३६–१३७
७९ एवं गुरुपरिपाटौ सर्वत्र प्रातिभस्य ज्यायस्त्वम् १३८–१३९
८० महादेवेनाधिष्ठितत्वे प्रातिभस्य बाह्यानपेक्षणीयत्वं
सभक्तिकत्वं देवीभिर्दीक्षितत्वञ्च १४०–१४१
८१ कल्पितांशे गुर्वादितः दीक्षादिस्वसंस्कारप्रकल्पनम् १४२
८२ अत्रार्थे वाजसिनेयप्रामाण्यम् १४३–१४४
८३ अत्रैव श्रीसर्ववीरब्रह्मयामलादेरपि प्रामाण्यम् १४५
८४ प्रातिभविज्ञानस्य सर्वसंपत्तिहेतुत्वे शेषमुनिप्रामाण्यम् १४६
८५ काम्यस्य नैयत्यात् केषांचन अत्र विवादोऽपि १४७–१४८
८६ सोमानन्दादिगुरुभिः त्रीशिकाशास्त्रवृत्तौ सांसिद्धिकस्य
चिन्तामणिप्रायत्वाभिधानादेतत्प्रतिक्षेपः १४९–१५०
८७ सांसिद्धिकज्ञानस्य दीक्षादिसंस्कारसतत्त्वे त्रीशिकासंवादः १५१–१५४
८८ दीक्षानिमित्तकज्ञानस्य अज्ञाननिमित्तत्वादत्र अनवसरः १५५
८९ प्रतिभायाः सर्वसंपत्तिहेतुत्वादेव गुरुशास्त्रादेरपि
उपायत्वनिर्वाहः १५६
९० एवं निरुपायतत्त्वस्यापि प्रतिभात्मकत्वम् १५७
९१ प्रातिभस्य गुरोः संस्कारद्वयोक्तौ अनुग्राहकत्वस्य हेतुत्वम् १५८
९२ प्रतिभायाः तारतम्येनोदयात् क्वचित्स्वमुक्त्या विश्वमुक्तिसंभावनम् १५९
९३ तंत्रालोकाभ्यासात् प्रातिभगुरुत्वोदयः १६०

९४ मंदशक्तिपाते गुरुशास्त्रापेक्षित्वम् १६१

९५ स्व-गुरु-शास्त्राद्यपेक्षे ज्ञानोदये किरणागमप्रामाण्यम् १६२

९६ अत्रार्थे श्रीमन्नन्दिशिखातन्त्रनिरूपणस्य अखण्डप्रतिपादनप्रतिज्ञा १६३

९७ शिवोपायविषयकदेवीप्रश्नस्योत्तरे प्रातिभज्ञानदायकतया
विवेकोपायस्य शम्भुना निरूपणम् १६४–१६५

९८ सप्रतिभस्य पुंसः मुक्तत्वं मोचकत्वञ्च १६६

९९ दीक्षया मोक्षे गुर्वायत्तत्वं प्रातिभाद्वा तथात्वे
केवलीभावप्रदस्वभावत्वम् इति भेदः १६७–१६९

१०० नर-शक्ति-शिवेति तत्त्वत्रयस्य बध्य-बन्ध-बन्धयितृत्वविवेकाद्
अनुत्तरोदये विवेकस्य स्वरूपविषययोः निर्णयार्थं देवीप्रश्नः १७०–१७२

१०१ शिवादितत्त्वत्रयस्य गुर्वादिमाहात्म्यात् प्रातिभतासादनम् इति
शिवस्य प्रतिवचनम् १७३–१७४

१०२ अत्रार्थे दृष्टान्तद्वयम् १७५–१७६

१०३ प्रमाणातीतविवेकोदये प्रातिभज्ञानोदयस्य अन्यानपेक्षित्वम् १७७–१७८

१०४ प्रादुर्भूतविवेके क्रीडाप्रायसिद्धीनामाविर्भावः १७९

१०५ प्ररूढविवेकस्य क्रीडासु वैमुख्यात् प्रातिभबलादेव बहिरन्तः
स्वसंविद्विश्रान्तिः १८०–१८२

१०६ सिद्धीनामभिधाने परप्रत्ययस्य नैमित्त्यम् १८३

१०७ तदभावे परभावनादार्ढ्याज्जीवन्मुक्तिः १८४

१०८ प्रादुर्भूतविवेकस्य शापानुग्रहकार्यत्वं शक्तित्वं
प्ररूढविवेकस्य तु मुक्तत्वं मोचकत्वं शिवत्वञ्च १८५–१८६

१०९ देवीप्रश्नोत्तरे जाड्यात्मनः संस्कारस्य भेदनिबन्धनत्वाद्
भेदनिवृत्तौ मनोबुद्ध्योः शक्तिरूपतासादने शिवस्य एव
भासकत्वाद् विवेकजज्ञानस्य अतीन्द्रियत्वोपपत्तिः १८७–१९१

११० त्रैगुण्याद् बुद्धेर्बन्धकत्वे सर्वक्रोडीकरणयोग्यतया अत्र विवेकस्य
कारणत्वाभिधानम् १९२

१११ दीक्षौचित्यविषये देवीप्रश्ने दीक्षाया अज्ञविषयत्वं तथा पाशमोक्षे
विवेकजप्रातिभज्ञानस्योदयः इति शिवोत्तरम् १९४–१९५

११२ इह प्रतिपदं ग्रन्थपाठे बोधदार्ढ्यरूपं प्रयोजनम् १९६

११३ श्रीमन्निशाटनप्रामाण्याज् ज्ञानस्य त्रैविध्येऽपि मन्त्रादि-षोढाशङ्काशामकत्वात् स्वत उद्भूतस्य मुख्यत्वम् १९७–१९८

११४ एतदर्थान्तर्भावेन मालिनीमतसंवादात् कस्मिंश्चित् काले योग्यतया शान्ताख्यशक्तेर्संबंधात् तीव्रतीव्रे तत्क्षण एव अपवर्गाप्तिः १९९–२००

११५ तत्रैव अज्ञाननिवृत्त्या रुद्रशक्तिसमावेशः शिवेच्छया सद्गुर्वाराधनेन च शाङ्करीदीक्षया उपभोगाद् देहपाताद्वा शिवीभावः २०१–२०३

११६ (एवमादिपुनरन्तमालिनीग्रन्थव्याख्याने) कालस्य आत्मकलनात्वं योग्यतायाश्च शिवतादात्म्ययोगार्हत्वम् २०४

११७ कालस्य तथाभासनरूपत्वाद् एतत्प्रागभावेदानींसद्भाव-शङ्कयोरनवकाशः २०५

११८ तथाभासस्य कालशक्तिविजृम्भणत्वम् २०६

११९ क्षोभप्रशमाभ्यां शक्तेर्द्वैविध्ये स्वरूपदृशः शान्तात्वम् २०७–२०८

१२० शान्तायाः स्वरूपदर्शनस्य सद्यस्त्वम् २०९

१२१ देहस्य पाते काष्ठादितुल्यत्वे वा तीव्रतीव्रशक्तिसमावेशाद् आत्मनः स्वरूपलाभः २१०–२११

१२२ इयदन्तं तीव्रतीव्रशक्तिपातविषयत्वं ग्रन्थान्तरस्य मध्यतीव्र-शक्तिपातविषयत्वम् २१२

१२३ (अज्ञानेनादिसमाविष्टान्तमालिनीग्रन्थव्याख्याने) संकोच-विनिवृत्तौ स्वस्वभावप्रकाशनम् २१३

१२४ रुद्रशक्तेः यथायथमतिशयाद् रुद्रभक्त्यादिषट्चिह्नानां व्यस्तसमस्ततायां भुक्तौ मुक्तौ च प्राधान्यम् २१४–२१६

१२५ इयदन्तं मध्यतीव्रविषयत्वं ग्रन्थान्तरस्य मन्दतीव्रशक्तिपात-विषयत्वम् २१७

१२६ (स आदिव्रजेदन्तमालिनीग्रन्थव्याख्याने) मन्दतीव्रशक्तिपातात् सद्गुरुं प्रति गमनेच्छोत्पत्तिः २१८

१२७ अत्रैव शास्त्रे सद्गुरोः सर्वतत्त्वविस्त्व-मन्त्रवीर्यप्रकाशकत्व-पापमोचकत्व-मुक्तिमुक्तिप्रदत्वादिलक्षणाभिधानम् २१९–२२१

१२८ जिगमिषुणा शक्तिपाततारतम्यात् तत्तद्भेदभिन्नस्य सांसिद्धिकस्य संस्कृतस्य वा गुरोर्लाभः २२२–२२४
१२९ तद्दीक्षया शिवीभावः जीवन्मुक्तिः देहसंबंधेन शिवताभिव्यक्तिश्च २२५–२२६
१३० दीक्षाया अस्याः बहुविधत्वं तत्र व्यस्तत्वं समस्तत्वञ्च २२७–२२८
१३१ तथात्वे देहसंस्थस्य मुक्तपदव्यपदेश्यत्वम् २२९
१३२ अत्रार्थे श्रीरत्नमाला-गमशास्त्रयोः प्रामाण्याज् जन्मान्तर-कर्मारब्धदेहस्य मायाधिष्ठितत्वान् मुक्तौ देहादेर्यन्त्रप्रायत्वे मुक्तत्वाभावशङ्कानवकाशः २३०–२३२
१३३ कर्मणेति पदे एकवचनस्य त्रिविधैकप्रघट्टकनया यत्तदोः हेतुहेतुमद्भावतया च सङ्गतिः २३३
१३४ प्राणहरसद्योनिर्वाणदीक्षायाः विधेयत्वं तत्र बहुविधोपाया-श्रयणञ्च २३४–२३५
१३५ अन्यथा सिद्ध्यभावाद् आसन्ने मरणक्षणे तस्या अनुष्ठेयत्वनियमः २३६–२३९
१३६ अपरत्रिकान्तर्गते तीव्रमध्ये शक्तिपाते दीक्षया देहान्ते शिवीभावः २४०
१३७ अत्रार्थे निशिसंचारयोगसंचारयोः प्रामाण्यम् २४१
१३८ मध्यमध्ये बुभुक्षोरनेनैव देहेन मन्दमध्ये तु देहान्तरेण भोगानन्तरं देहान्ते शिवत्वासादनम् २४२–२४३
१३९ अत्रापि तरतमभावाद् विशेषत्रयोदयः २४४
१४० तीव्रमन्द-मध्यमन्द-मन्दमन्दाख्ये त्रिविधे शक्तिपाते बुभुक्षाप्राधान्यतारतम्यात् लोकधर्मिणः स्वोचितदीक्षया भोगानन्तरं शिवत्वासादनम् २४५
१४१ मालिनीमतग्रन्थस्य व्याख्यानान्तरे यियासुरित्यादिग्रन्थस्य अज्ञानेन सहेत्यादिग्रन्थेन संगतौ मध्यतीव्रशक्तिपातविषयत्वम् २४६
१४२ प्रातिभज्ञानवत्त्वेऽपि शक्त्या सद्गुरुं प्रति अभिमुखीकरणे संवाददार्ढ्यापेक्षया यियासुत्वौचित्यम् २४७–२५०
१४३ एतद्व्याख्यानस्य नन्दिशिखातन्त्रोपज्ञत्वम् २५१–२५२

१४४ तमाराध्येत्यादिमालिनीग्रन्थस्य मन्दतीव्रविषयत्वम् २५३
१४५ नवधा शक्तिपातस्य संविदनवच्छेद-भोगांशावच्छेदाभ्यां परापरविभागसारत्वम् २५४–२५५
१४६ उभयत्र मायान्तरवर्तिकर्मनिरपेक्षत्वम् २५६
१४७ मायान्तराल-तदूर्ध्ववर्तिरुद्राणां कर्मनैरपेक्ष्येण भैरवीभावः २५७–२५८
१४८ जपादिकर्मणः तत्तत्सिद्धौ कर्मनैरपेक्ष्यव्याघातशङ्का २५९
१४९ तत्र प्रवृत्तौ शक्तिपातैकहेतुत्वे कर्मनैरपेक्ष्यसिद्धिः २६०–२६१
१५० कर्मणः भोगप्रदत्वेन भोक्तृतिरोधायकत्वात् जपादेः क्रियाशक्तित्वं न कर्मत्वम् २६२–२६३
१५१ शुद्धानां भोगोत्कतायां पारमेश्वरस्वातन्त्र्यनिबन्धनत्वमिति प्राग्दत्तोत्तरानुवादः २६४–२६५
१५२ पशुशिवावस्थानभेदेन एकस्या एव बाधकतया कर्मत्वं क्रियाशक्तित्वञ्च २६६
१५३ अत्र सिद्धेर्भुक्तिमुक्तिस्वातन्त्र्यलक्षणत्वम् २६७
१५४ भोगाधानान्नतु पर्यन्ते शिवताधानाद् विष्ण्वादिरूपतादेर्मायापदवर्तित्वम् २६८–२६९
१५५ तेषामनुग्रहसामर्थ्ये शिवशक्तिपातस्य हेतुत्वम् २७०
१५६ तदेवं प्रकृतिपुरुषविवेकात् कस्यचन प्रकृतेरुत्तीर्णत्वं पुंमायाविवेकात् कस्यचन मायातः २७१–२७२
१५७ प्राक्तनस्य ज्ञानाकलत्वं कर्मित्वञ्च पश्चात्तनस्य कर्मनिवृत्तिः २७३
१५८ प्राक्तनस्य प्रकृत्यधः संसरणाभावेऽपि मायाधः अनन्तनाथसृष्टत्वम् २७४
१५९ पश्चात्तनस्य शिवप्रेरणया क्रमेण मन्त्रमहेशत्वाद्यापादनम् २७५
१६० परशक्तिमात्रस्य मलविविक्तशिवभावप्रकाशकत्वम् २७६–२७७
१६१ अत्रार्थे स्वच्छन्दशास्त्रप्रामाण्याद् वैष्णवादीनां भ्रान्तत्वे शिवज्ञानस्यैव शिवतापत्तिदायकत्वम् २७८
१६२ शक्तिपातस्य शिवतापत्तिपर्यन्तत्वाद् एषां शिवज्ञानेऽधिकाराभावः २७९–२८०

१६३ एषां शिवतौन्मुख्ये लिङ्गोद्धारादिदीक्षाक्रमेण
द्विगुणसंस्कारापेक्षित्वम् २८१
१६४ अत्रार्थे दृष्टान्तः २८२
१६५ निरपेक्षशक्तिपातनिरूपणोपसंहारः २८३
१६६ मतङ्गकिरणादीनामनयैव दिशा व्याख्येयत्वम् २८४
१६७ तस्यैव प्रसादाद् भक्तिः तया परा सिद्धिरित्यत्रार्थे
पुराणस्यापि प्रामाण्यम् २८५
१६८ कर्मादिनैरपेक्ष्ये नैर्मल्यादात्मनः पूर्णत्वं विष्णवादिविषयायां
भक्तौ कर्मादिसापेक्षस्यैव शिवस्य हेतुत्वमिति अन्वयव्यतिरेकमुखेन
पुराणार्थव्याख्यानम् २८६–२८९
१६९ अत्रार्थे अनपेक्षित्व-दुर्लभत्वा-ऽरागित्वस्य शक्तिपातवैचित्र्यस्य
चाभिधानाद् गुरोरुत्पलदेवस्याप्यनुमोदनम् • २९०–२९२
१७० मातंगे उन्मीलनीशक्तिव्याख्यानद्वारेण श्रीमदनिरुद्धेन
एतदर्थाभिधानम् २९३–२९४
१७१ शक्तिपाततारतम्यभेदादधिकारिवैचित्र्याभिधानम् २९५
१७२ समयि-पुत्रक-साधका-ऽऽचार्येत्यधिकारिचतुष्टयस्वरूपनिर्णयः २९६–२९८
१७३ शक्तिपातस्य क्रमाक्रमाभ्यां समासविकासयोगादेषां
वैचित्र्यम् २९९
१७४ शक्तिपातक्रमाक्रमाभ्यां सम्प्रदायवैचित्र्यात् सिद्धान्तादौ क्रमत्वं
त्रिकादौ चाक्रमत्वम् ३००–३०१
१७५ त्रिकगुरोरधःस्रोतसुतीर्णत्वाभिधानाद् अत्रार्थे
श्रीभैरवकुलप्रामाण्यम् ३०२
१७६ वाममार्गिणः भैरवे तन्त्रे पुनः संस्कारापेक्षित्वाभिधानात्
ज्ञानाचारभेदस्य आधरोत्तर्यनिमित्तत्वे सर्वाचारहृदय-
प्रामाण्यम् ३०३–३०४
१७७ शैवादीनां विशेषतः वैष्णवानां भैरवे मण्डले पशुरूपत्वाद्
योग्यताऽभावः ३०५–३०६
१७८ अन्यशास्त्ररतस्य अन्यस्मिन् सिद्ध्यभावः इत्यभिधानाद्
अत्रार्थे स्वच्छन्दशास्त्रप्रामाण्यम् ३०७

१७९ एवं वैष्णवादीनां तादृशशक्तिपाताभावे समय्यादिगुरुत्वाभावः ३०८
१८० छद्मगुरोः तच्छिष्यस्य वा नरकगामित्वम् ३०९–३१०
१८१ छद्मगुरौ भक्तेस्तिरोभावरूपत्वं न तु शक्तिपातलिङ्गत्वम् ३११
१८२ भूपतिना चौरस्य इव सद्गुरुणा छद्मगुरोः शैवज्ञानाहरणेन निग्रहीतव्यत्वम् ३१२–३१३
१८३ प्रथमं गुरुणा शिवज्ञानोपदेशेऽपि अस्य वामाधिष्ठितत्वात् पतिपदप्राप्त्यशक्यत्वम् ३१४–३१५
१८४ वैष्णवादीनाममोक्षे मोक्षलिप्सया मायया भ्रामणे स्वच्छन्दशास्त्रप्रामाण्यम् ३१६
१८५ शैववैष्णवशास्त्रमेलनात् ततः तत्तत्समयोल्लंघनाद् एषाम् उभयभ्रंशः ३१७–३१८
१८६ अन्यशास्त्ररतस्य शिवज्ञानानधिकारे श्रीमद्गह्वरप्रामाण्यम् ३१९
१८७ विभज्य ग्रस्य प्रदर्शने अनवच्छिन्नत्वादूर्ध्वस्थस्य अधःस्थे अधिकारः न इतरथा ३२०–३२१
१८८ एवमूर्ध्वस्थगुरुणा अधरक्रियाणां सफलीकरणम् अधःस्थशिष्यस्य चोर्ध्वमानयनम् ३२२–३२३
१८९ अत्रार्थे दृष्टान्तः ३२४
१९० एवमधराधरस्य उत्तरोत्तरेऽधिकारे शास्त्रलङ्घित्वं निग्रहणीयत्वञ्च ३२५
१९१ शैवादीनां परस्परम् आधरौत्तर्ये शक्तिपातस्य नैमित्त्यम् ३२६
१९२ ज्ञानिषु श्रौतादिचतुष्के भावनामयज्ञानस्य मोक्षैककारणत्वात् ज्यायस्त्वम् ३२७–३२८
१९३ योगिनस्तु स्वभ्यस्तज्ञानवत्त्वात् मोक्षकारणत्वम् ३२९
१९४ एवं साक्षान्मर्त्यमोचकत्वाभावे ऊर्ध्वेषु सदाशिवतत्त्वेषु योगजासिद्धेरनवकाशः ३३०–३३१
१९५ मालिनीतंत्रप्रामाण्यात् स्वभ्यस्तज्ञानवतः एव मोक्षदत्वं गुरुत्वञ्चं ३३२
१९६ अत्र शंभुनाथप्रोक्तविभागप्रदर्शनोपक्रमः ३३३
१९७ अतः प्राप्तस्यापि अस्वभ्यस्तज्ञानस्य गुरोः त्याज्यत्वम् ३३४

१९८ तत्र भृङ्ग-द्रुमदृष्टान्ताभ्यां विज्ञानार्थिना अशक्ताद्गुरोः
शक्तगुर्वन्तरगमने शिववचनप्रामाण्यम् ३३५–३३६
१९९ भोगमोक्षविज्ञानार्थिना सिद्धयोगस्य स्वभ्यस्तज्ञानिनो
गुरोराश्रयणीयत्वम् ३३७–३३८
२०० भोगार्थिना च योगिनः आश्रयणीयत्वम् ३३९
२०१ उपायोपदेशिनोः ज्ञानियोगिनोर्मध्ये ज्ञानिनः वरत्वम् ३४०
२०२ पूर्णज्ञगुरोर्दुर्लभत्वे, धन्येनैव तदुपलाभे, विज्ञानपारिपूर्ण्यार्थम
असंख्यगुर्वाश्रयणोपदेशः ३४१–३४३
२०३ अत्रार्थे सर्वशिष्यस्य नोपदेशदरिद्रता इति श्रीकल्लटोक्तिसंवादः ३४४
२०४ अधरशास्त्रकुतूहलाद् ग्रन्थकृता स्वकृततार्किकादिनानागुरु-
सेवनसंसूचनम् ३४५
२०५ तत्र वैदिकादिगुरूणां यथायथं बोधोत्कर्षतारतम्यम् ३४६
२०६ अत्रार्थे श्रीपूर्वशास्त्रप्रामाण्यात् नारदादित्रिकज्ञान्त-
गुरुशास्त्रपरिचयात् संबोधोत्कर्षे गुरुभूयस्त्वस्य अवचनीयत्वम् ३४७–३४८
२०७ तत्र तत्र शास्त्रेऽधिकृतस्य गुरुत्वमनधिकृतस्य गुर्वन्तरत्वम्
इति ग्रहणात् शास्त्रोक्तगुर्वन्तरगमननिषेधसंगतिः ३४९–३५०
२०८ अनधिकाराद् ऊर्ध्वस्थस्य अधराचार्यगमने विनाश
इत्यत्र दृष्टान्तः ३५१–३५२
२०९ श्रीमदानन्दशास्त्रप्रामाण्यादूर्ध्वस्थस्य अधरकर्माश्रयणे
धनदाराद्यपचयः पापभागित्वञ्च ३५३–३५५
२१० ऊर्ध्वारुरुक्षूणां शक्तिपातबलाद् अधरगुर्वागमजिहासा ३५६
२११ एतान्प्रति शैवदर्शने संस्कारविशेषविधानम् ३५७
२१२ शास्त्रान्तरस्थस्य अनुग्राह्यत्वाद् इतो पाताभावात्
शैवशास्त्रस्योत्तमत्वे वैष्णवादिभिर्लिङ्गोद्धारादेरन-
भिधानम् ३५८–३५९
२१३ एवं ब्रह्मविष्णुबुद्धादीनां शैवपरमार्थैकवेदित्वं केवलं
मोहाभिनिविष्टोपदेष्टृपेक्षया तथोपदेशः ३६०–३६१
२१४ युक्त्यागमाभ्यां शक्तिपातविवेचनोपसंहारः

## चतुर्दशमाह्निकम्


| | | |
|---|---|---|
| १ | तिरोभावस्वरूपविवेचनप्रतिज्ञा तत्र परमेश्वरस्य स्वच्छन्दशब्दव्यपदेश्यत्वम् | १ |
| २ | नियतिक्रमस्पर्शेन अस्य अवान्तरसर्गस्य प्रकाशनम् | २ |
| ३ | नियतिक्रमास्पर्शेन महदवान्तरसर्गयोः प्रकाशनम् | ३–४ |
| ४ | कार्मनियमापेक्षणानपेक्षणाभ्यां नियत्यत्यागत्यागयोः तिरोभावाऽभावौ | ५–६ |
| ५ | अनुत्तीर्णस्य अनादरप्रत्ययेन उत्तीर्णवच्चेष्टायाः तिरोधानत्वम् | ७–८ |
| ६ | भवद्दर्शनदीक्षितत्वेऽपि तत्र विप्रतिपन्नानां कुमार्गित्वे तिरोहितत्वमित्यत्र दृष्टान्तमुखेन मानस्तोत्रवचनात् श्रीविद्याधिपतिप्रामाण्यम् | ९–१२ |
| ७ | प्रबुद्धचेष्टया अस्यान्तर्दाहस्य तिरोभावरूपत्वम् | १३ |
| ८ | अस्य तिरोधानहेतुत्वे पूर्वविधितुल्यत्वम् | १४ |
| ९ | एवं परमेश्वरेच्छाहेतुत्वादस्य दुःखपात्रत्वम् | १५ |
| १० | तत्रापि इच्छावशाद् दुःखवैचित्र्यस्य उभयात्मकत्वम् | १६ |
| ११ | ऐहिकामुष्मिकदुःखभेदेन कालादीनां विभागः | १७ |
| १२ | श्रीमदानन्दगह्वरप्रामाण्यात् तिरोधाने समयोल्लंघनस्यापि नैमित्त्यम् | १८ |
| १३ | तत्रापि मन्दतीव्रादिभेदाद् बहुविधत्वम् | १९ |
| १४ | तिरोधानव्यपगमे स्वतः परतो वा अनुग्रहहेतुत्वम् | २० |
| १५ | आद्ये स्वयं पश्चिमे गुर्वाद्यवलम्बनेन दीक्षादिना शिवतासादनम् | २१–२२ |
| १६ | अत्रापि शक्तिपातवैचित्र्यात् चिरक्षिप्रत्वादिवैचित्र्यम् | २३ |
| १७ | पञ्चकृत्यकारित्वस्य शिवत्वम् | २४ |
| १८ | तदात्मतापरामर्शिनः योगिनोऽर्चादीनां सदोदितत्वम् | २५ |
| १९ | भोगस्य बन्धत्वात् तत्र भोगासक्तिनिषेधः | २६ |
| २० | शिवे ज्ञानक्रिययोरभेदात् कुलालादिवत्कर्तृत्वस्य अमुख्यत्वम् | २७ |
| २१ | देहात्माभिमानिनाम् अस्माकं मुख्यकर्तृत्वाभावात् स्वतन्त्रात्मन्येव | |

शिवत्वाभिमानस्य विधेयत्वात् जगतः स्वेच्छानुवर्तित्वस्य अखण्डनम् २८–३०
२२ शरीरधर्मेष्वेव भ्रान्तस्य परमार्थे भ्रान्तिरिति वचनादत्रार्थे ऊर्मिमहाकुलप्रामाण्यम् ३१
२३ उत्क्रान्तेर्नियतदेशतया विधानाद् अनया आत्मनः आकाशे योजनाद् अस्याः सारशास्त्रोक्तं भोगोपायत्वम् ३२–३५
२४ परतत्त्वकामैरेतदनुष्ठानस्य निषेधः ३६
२५ श्रीपूर्वशास्त्रोक्तस्य उत्क्रान्तिलक्षणस्य भोगहान्यर्थं देहत्यागोपायत्वं न तु मुक्त्युपायत्वम् ३७–३८
२६ भीष्मादेवृत्तान्तादेतदर्थस्य पोषणम् ३९
२७ उत्क्रान्तिं विना देहत्यागस्य अशक्यत्वम् ४०
२८ शिवाहंभावाभिमानेनैव मुक्तिः, उत्क्रान्त्या देहत्यागः इत्येतदर्थस्य मालिनीतंत्रोपज्ञत्वम् ४१
२९ पञ्चकृत्यकारित्वाभिमानस्यैव मुख्यदीक्षात्वम् ४२
३० श्रीनिशिचारप्रामाण्यात् सविकल्पवृत्तीनां देहपाते निर्विकल्पवृत्तीनां देहभावेऽपि मुक्तौ संशयाभावः ४३–४५
३१ पुनः पुनः फूत्कारोत्तेजितविस्फुलिङ्गदीपनन्यायाद् देहान्ते बोधाग्निप्रज्वलनाद् विदेहमुक्तिसार्थक्यम् ४६
३२ शास्त्रसम्मतदीक्षोपक्रमोपसंहारः

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकाख्यटीकोपेते

## दशममाह्निकम् ।

तत्तत्त्वविभेदन-
समुद्यतोद्द्योतिनिशितशूलकरः ।
जयति परं जयमूर्तिः
संसारपराजयस्फूर्तिः ॥

इदानीमेषामेव तत्त्वानां द्वितीयार्धेन पाञ्च-दश्यादिभेदमभिधातुं प्रतिजानीते

उच्यते त्रिकशास्त्रैक-
रहस्यं तत्त्वभेदनम् ॥ १ ॥

तदेवाह

तेषाममीषां तत्त्वानां
स्ववर्गेष्वनुगामिनाम् ।

भेदान्तरमपि प्रोक्तं
शास्त्रेऽत्र श्रीत्रिकाभिधे ॥ २ ॥

भेदान्तरमपि पाञ्चदश्यादिलक्षणमपि—इति पूर्वापेक्षया । 'श्रीत्रिकाभिधे शास्त्रे' इति श्रीमालिनीविजयोत्तरे । तदुक्तं तत्र

'अथैषामेव तत्त्वानां धरादीनामनुक्रमात् ।
प्रपञ्चः कथ्यते लेशात्... । (मा० वि० २।१)

इत्यादि

'शिवः साक्षान्न भिद्यते ।' (मा० वि० २।७)

इत्यन्तम् ॥ २ ॥

तदेवाह

शक्तिमच्छक्तिभेदेन
धराद्यं मूलपश्चिमम् ।
भिद्यते पञ्चदशधा
स्वरूपेण सहानरात् ॥ ३ ॥
कलान्तं भेदयुग्धीनं
रुद्रवत्प्रलयाकलः ।

तद्वन्माया च नवधा
　　ज्ञाकलाः सप्तधा पुनः ॥ ४ ॥
मन्त्रास्तदीशाः पाश्वध्ये
　　मन्त्रेशपतयस्त्रिधा ।
शिवो न भिद्यते स्वैक-
　　प्रकाशघनचिन्मयः ॥ ५ ॥

'शक्तिमच्छक्तिभेदेन' इति शक्तिमतां शक्तीनां च वक्ष्यमाणस्वरूपाणां शिवादीनामिच्छादीनां च भेदेन प्रत्येकं सप्तधात्वे चतुर्दशात्मना प्रकारेणेत्यर्थः । मूलपश्चिममिति प्रधानान्तं तत्त्वचतुर्विंशकमित्यर्थः । स्वरूपेणेति स्वं रूपं मातृमानाद्यनुपरक्तं बहीरूपतया परिदृश्यमानजडस्वभावं यथा पृथिव्या गन्धादिगुणोत्कटम् । यद्वक्ष्यति

'तत्र स्वरूपं भूमेर्यत्पृथग्जडमवस्थितम् ।
मातृमानाद्युपधिभिरसंजातोपरागकम् ॥' (१०।८)

इति । आ नरादिति पुंस्तत्त्वादारभ्य कलान्तं तत्त्वषट्कमित्यर्थः । भेदयुग्घीनमिति भेदयु-

१ ग० पु० अपेति पाठः ।

म्मरहितं त्रयोदशविधमिति यावत् । इह यद्यपि सर्वं सर्वात्मकमिति सर्वत्र पञ्चदशात्मकत्वमेव न्याय्यं, तथाप्यधराधरतत्त्वक्रोडीकारेण प्रतितत्त्वं प्राक् पूर्णेन रूपेण परसंवित्समुल्लसेत् येनोत्तरोत्तरत्र पूर्वपूर्वस्थितिरव्यभिचारेण भवेत्, अन्यथा हि

'यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ।' (तं०८।३)

इत्याद्युक्तयुक्त्या धरादेस्तत्त्वजातस्य सत्तैव न स्फुरेत् । उत्तरोत्तरं पुनस्तत्त्वजातं पूर्वपूर्वस्मिन्रूपे विलीनं सत् क्रमेण संविद्येव विश्राम्येत् यथायथं तस्या एवोद्रेकात्, अत एव संविद्विश्रान्तत्वान्न तत्पृथग्भोगं दातुमलम्, — इति तदीयं भेदद्वयं न्यूनतामियात्, येनात्र सशक्तिकस्य प्रलयाकलादेः षट्कस्य प्रमातृत्वात् सकलस्य च सशक्तिकस्य स्वरूपीभूतत्वात्त्रयोदशविधत्वमेव स्यात् । यदुक्तं

'विश्वात्मके हि विश्वस्मिन् या संविदवलोकयेत् ।
निजवीर्यमहास्फारं समवष्टम्भयोगतः ॥
विशिष्टकार्यसंपत्त्यै भ्रान्तत्रोदेति सा हठात् ।
अधराधरतत्त्वेषु स्थिता पूर्वस्थितिर्यतः ॥

अन्यथा स्थितिरेवैषां न भवेत्पूर्वहानितः ।
पूर्वस्वरूपे त्वधरं विलीनं तत्त्वजालकम् ॥
भोगाय नालमित्येवं न्यूनत्वं तत्र भेदगम् ।'

इति । सशक्तिकश्च सकलः स्वरूपीभूतः सन् स्वरूपमेव न तथा भिन्द्यात् । भेदो हि प्रतियोगिनमधिकृत्य परत्र भेदसंकलनां विदध्यात्, यथेदं मेयम्, इदं मानम्, अयं माता—इति। मेयस्य पुनर्मेयता स्वात्मनि न कश्चिद्भेदः । एवं स्वरूपस्य स्वात्मनि भेदाभावात् युक्तमुक्तं क्रमेण भेदद्वयह्रास इति । यदुक्तम्

'भेदा हि न स्वरूपं भिन्दन्त्यपि तु भेदसंकलनाम् ।
अन्यत्र प्रतियोगिनि विदधति हि परत्र तेन तदभावात् ॥
निजगतभेदद्वितयीनिरास उक्तः क्रमेणेह ।
परिपूर्णे शिवतत्त्वे भेदाभावादभेद्यता तेन ॥'

इति । रुद्रवदिति रुद्रशब्देन लक्षितामेकादशसंख्यामर्हतीति वत्यन्तम् । प्रलयाकल इत्यर्थात्स्वरूपीभूतः । एवमुत्तरत्र विज्ञानाकलादावपि ज्ञेयम् । अत एवात्र विज्ञानाकलादीनां पञ्चानामेव प्रमातृत्वं येनैकादशविधत्वम् । मायेति तात्स्थ्याद्द्वितीयोऽपवेद्यः प्रलयाकल उच्यते, तेन सोऽप्येकादशविध एवेत्यर्थः । नव-

धेति सशक्तीनां चतुर्णां मन्त्रादीनां प्रमातृत्वात् । सप्तधेति सशक्तिकस्य मन्त्रेश्वरादेस्त्रयस्य प्रमातृत्वात् । तदीशाः मन्त्रेश्वराः । पञ्चध्ये इति मन्त्रमहेश्वरशिवयोरेव सशक्तिकयोः प्रमातृत्वात् । त्रिधेति शिवस्यैव सशक्तिकस्य प्रमातृत्वात् । शिवस्य भेदाभावे हेतुः 'स्वैकप्रकाशघनचिन्मय' इति । भेदो हि प्रतियोग्यपेक्षः, न च परं प्रकाशमपेक्ष्य अन्यः कश्चित्प्रतियोगी संभवेदिति समनन्तरमेवोक्तमित्यास्तामेतत् । उक्तं च

'शक्तिमच्छक्तिभेदेन धरातत्त्वं विभिद्यते ।
स्वरूपसहितं तच्च विज्ञेयं दशपञ्चधा ॥'
(मा० वि० २।२)

इति ।

'एवं जलादिमूलान्तं तत्त्वव्रातमिदं महत् ।
पृथग्भेदैरिमैर्भिन्नं विज्ञेयं तत्फलेप्सुभिः ॥
अनेनैव विधानेन पुंस्तत्त्वात्तत्कलान्तकम् ।
त्रयोदशविधं ज्ञेयं रुद्रवत्प्रलयाकलः ॥
तद्वन्मायापि विज्ञेया नवधा ज्ञानकेवलाः ।
मन्त्राः सप्तविधास्तद्वत्पञ्चधा मन्त्रनायकाः ॥
त्रिधा मन्त्रेश्वरेशानाः शिवः साक्षान्न भिद्यते ।'
(मा० वि० २।७)

इति च ॥ ३—५ ॥

ननु के ते 'शक्तिमच्छक्तिभेदेन' इत्यासूत्रिताः शक्तयः शक्तिमन्तश्च येन भुवः पञ्चदशात्मकत्वं स्यादित्याशङ्क्याह

शिवो मन्त्रमहेशेश-
मन्त्रा अकलयुक्कली ।
शक्तिमन्तः सप्त तथा
शक्तयस्तेच्चतुर्दश ॥ ६ ॥
स्वं स्वरूपं पञ्चदशं
तद्भूः पञ्चदशात्मिका ।

ईशा मन्त्रेश्वराः, अकलयुग्विज्ञानाकलप्रलयाकलौ, कली सकलः, शक्तय इत्यर्थात् शिवादिसंबन्धिन्य इच्छाद्याः सप्त । तदुक्तम्

'शिवादिसकलात्मान्ताः शक्तिमन्तः प्रकीर्तिताः ।
तच्छक्तयश्च विज्ञेयास्तद्वदेव विचक्षणैः ॥'

(मा० वि० २।३)

इति । स्वं स्वरूपमिति अर्थात्पृथिव्यादेः ॥ ६ ॥

नन्वस्मद्दर्शने नरशक्तिशिवात्मकमेव विश्वमिति सर्वत्रोद्धोष्यते, तत्कथमिह सिद्धान्त-

---

१ ग० पु० ताः इति पाठः ।

दर्शनादिसमुचितं प्रमातृभेदमवलम्ब्यैतदुक्त-मित्याशङ्कां गंर्भीकृत्यैतदुपपादयति

तथाहि तिस्रो देवस्य
शक्तयो वर्णिताः पुरा ॥ ७ ॥
ता एव मातृमामेय-
त्रैरूप्येण व्यवस्थिताः ।

त्रैरूप्यमेव वर्णयति

परांशो मातृरूपोऽत्र
प्रमाणांशः परापरः ॥ ८ ॥
मेयोऽपरः शक्तिमांश्च
शक्तिः स्वं रूपमित्यदः ।

अद इति वाक्यार्थपरामर्शः, तेन मातृरूपः परांशः शक्तिमान्, प्रमाणरूपः परापरांशः शक्तिर्मेयरूपोऽपरांशः स्वरूपमिति । यत्पुनः शक्तिमतां शक्तीनां च सप्तविधत्वमुक्तं तदवान्तरप्रकारप्रायमित्यत्र मौलं[1] नरशक्तिशिवात्मकत्वमेव स्थितमिति न कश्चिद्दोषः ॥ ८ ॥

१ क० पु० मौलं रूपमिति पाठः ।

एवमेषा शक्तिमदादीनां मध्यात्स्वरूपं तावत्प्रथमं लक्षयति

तत्र स्वरूपं भूमेर्य-
त्पृथग्जडमवस्थितम् ॥ ९ ॥
मातृमानाद्युपधिभि-
रसंजातोपरागकम् ।

असंजातोपरागकमिति, तदुपरक्तत्वे हि शक्तिमदादिरूपत्वमेव स्यादित्याशयः ॥ ९ ॥

एवमस्यैकध्येऽपि अवान्तरचतुर्दशभिन्नत्वे शक्तिमन्तः शक्तयश्च निमित्तमित्याह

सकलादिशिवान्तैस्तु
मातृभिर्वेद्यतास्य या ॥ १० ॥
शक्तिमद्भिरनुद्भूत-
शक्तिभिः सप्त तद्भिदः ।
सकलादिशिवान्तानां
शक्तिषूद्रेचितात्मसु ॥ ११ ॥

वेद्यताजनिताः सप्त
भेदा इति चतुर्दश ।

अनुद्भूतशक्तिभिरित्यनेनात्र शक्तिमतां प्राधान्यं कटाक्षितम् । उद्रेचितात्मस्वित्यनेन तु शक्तीनाम् । वस्तुतो हि शक्तितद्वतोः परस्परमवियोग एव, किंतु प्राधान्यमेव प्रयोजकीकृत्य तथाव्यपदेशो यदयं शक्तिमान् इयं शक्तिरिति ॥

ननु सकलादिप्रमातृसप्तकं सर्वत्र प्रसिद्धमित्यास्तां को दोषः, तच्छक्तयस्तु न क्वचिदपि परिपठिताः, इति कास्ताः,—इत्याशङ्क्याह

सकलस्य प्रमाणांशो
योऽसौ विद्याकलात्मकः ॥१२॥
सामान्यात्मा स शक्तित्वे
गणितो नतु तद्भिदः ।
लयाकलस्य मानांशः
स एव परमस्फुटः ॥ १३ ॥

ज्ञानाकलस्य मानं तु
　　गलद्विद्याकलार्थेति ।
अशुद्धविद्याकलना-
　　ध्वंससंस्कारसंगता ॥ १४ ॥

प्रबुभुत्सुः शुद्धविद्या
　　मन्त्राणां करणं भवेत् ।
प्रबुद्धा शुद्धविद्या तु
　　तत्संस्कारेण संगता ॥ १५ ॥

मानं मन्त्रेश्वराणां स्या-
　　त्तत्संस्कारविवर्जिता ।
मानं मन्त्रमहेशानां
　　करणं शक्तिरुच्यते ॥ १६ ॥

स्वातन्त्र्यमात्रसद्भावा
　　या त्विच्छा शक्तिरैश्वरी ।
शिवस्य सैव करणं
　　तया वेत्ति करोति च ॥ १७ ॥

---

१ ग० पु० कलेति पाठः ।

सामान्यात्मेति विद्याकलाभ्यामेव बुद्धि-कर्मेन्द्रियलक्षणस्य विशेषात्मनः प्रसरस्य संग्रहात्, अत एवोक्तं 'नतु तद्विदः' इति। एवं हि तत्तद्व्यापारभेदादनन्ताः शक्तयो भवेयुरिति भावः। उक्तं च प्राक्

'तेनाशुद्धैव विद्यास्य सामान्यं करणं पुरा।
ज्ञप्तौ कृतौ तु सामान्यं कला करणमुच्यते ॥'

( तं० ९।२४४ )

इति। स एवेति विद्याकलात्मकः, परम-स्फुट इति, इयान्विशेषः, स हि प्रसुप्तभुजग-प्राय इत्यभिप्रायः। गलदिति गलन्त्यौ विना-शोन्मुखे इत्यर्थः। प्रबुभुत्सुरिति नतु प्रबुद्धा, एवं ह्यशुद्धविद्याकलाध्वंससंस्कारसंगमोऽस्या न स्यात्। प्रबुद्धत्वे हि अशुद्धविद्याकलाध्वंस-संस्कारस्यापि नश्यदवस्थात्मना संस्कारेणास्याः संगमो भवेत्। अत उक्तं 'तत्संस्कारेण संगता' इति। तत्संस्कारविवर्जितेति, तेन नश्यदव-स्थात्मनापि संस्कारेण विवर्जिता प्रनष्टतत्सं-स्कारेत्यर्थः। नहि इदानीमशुद्धविद्यादेर्गन्ध-मात्रमपि संभवेदिति भावः। मानमित्यर्था-

च्छुद्धविद्या, मानमेव च करणमिति शक्ति-रिति च तत्र तत्र व्यपदिश्यते,—इत्युक्तं 'करणं शक्तिरुच्यते' इति । स्वातन्त्र्यमात्रसद्भावेति, तदुक्तं प्राक्

'एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते ।
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ॥'
(तं० १।६७)

इति । अत एवैश्वरीत्युक्तं, तया वेत्ति करोति चेति सर्वशेषः, यत्सकलोऽपि अशुद्ध-विद्याकलात्मिकयैव शक्त्या वेत्ति करोति चेति, एवमन्यज्ज्ञेयम् ॥ १२–१७ ॥

एवं प्रसङ्गात्सकलादिशक्तीनां स्वरूपमभि-धाय प्रकृतमेवाह

आ शिवात्सकलान्तं ये
मातारः सप्त ते द्विधा ।
न्यग्भूतोद्रिक्तशक्तित्वा-
त्तद्भेदो वेद्यभेदकः ॥ १८ ॥

ननु प्रमातृभेदाद्यदि वेद्यस्यापि भेदो भवेत् तदनेकेषु प्रमातृषु एकमेव नीलं विदितं

न स्यादपितु भिन्नाभिन्नं, न चैवमस्ति नहि तत्तद्देशकालावस्थाप्रमातृभेदेऽपि नीलस्य स्वात्मनि कश्चिद्विशेषः संलक्ष्यते, इत्याशङ्कां गर्भीकृत्यैतदेवोपपादयति

तथाहि वेद्यता नाम
भावस्यैव निजं वपुः ।

अनेन चानुजोद्देशोद्दिष्टस्य वस्तुधर्माख्यस्य प्रमेयस्यासूत्रणं कृतम् ॥

नन्वसिद्धेयं प्रतिज्ञा नहि नीलज्ञाने नीलस्य कश्चिद्विशेषः, अपितु प्रमातुस्तस्य पूर्वमज्ञत्वेऽनन्तरं ज्ञत्वोत्पत्तेः, यदपि

'प्रत्यक्षतां परोक्षोऽपि प्रत्यक्षोऽपि परोक्षताम् ।
देशकालादिभेदेन विषयः प्रतिपद्यते ॥'

इत्याद्युक्त्या विषयस्य प्रत्यक्षत्वं परोक्षत्वं वा धर्म उच्यते तदपि प्रमात्रतिशयाभिप्रायमेवेत्याशङ्क्यात्रैव हेतुमाचष्टे

चैत्रेण वेद्यं वेद्मीति
किंह्यत्र प्रतिभासताम् ॥ १९ ॥

नीलं वेद्मीत्यत्र केवलनीलप्रथायां वेद्यताया

विषयधर्मत्वं मा विज्ञायि, चैत्रेण वेद्यं नीलं वेद्मीत्यस्यां तु प्रथायां किं नीलमात्रं प्रथते किमुत चैत्रवेद्यताविशिष्टं नीलमिति । तत्राद्ये नीलं वेद्मि चैत्रवेद्यं नीलं वेद्मीत्यनयोः प्रतीत्योरविशेषः स्यात्, न चैवमनुभवविरोधात् । द्वितीये तु चैत्रवेद्यता नीलस्य किं स्वगता विशेषणमुत प्रमातृगता, न तावत्प्रमातृगता व्यधिकरणयोर्भिन्नकक्ष्यत्वेन विशेषणविशेष्यभावायोगात्, स्वगतत्वे तु सिद्धः प्रतिज्ञार्थो 'वेद्यता भावस्य निजं वपुः' इति ॥ १९ ॥

ननु व्यधिकरणत्वेऽपि ज्ञातोऽर्थ इति तथा प्रतीतेरस्तु विशेषणविशेष्यभावः, चैत्रेण वेद्यं नीलं वेद्मीत्यस्यां हि प्रथायां चैत्रेण ज्ञातमर्थं जानामीत्युक्तं भवेत्, ज्ञानं च प्रमातुरेवातिशयो न प्रमेयस्येत्युक्तप्रायं तदाह

ननु चैत्रीयविज्ञान-
मात्रमत्र प्रकाशते ।
वेद्यताख्यस्तु नो धर्मो
भाति भावस्य नीलवत् ॥ २० ॥

अत्रेति नीलादौ विषये ॥ २० ॥

ननु ज्ञानं नाम क्रिया, सा च फलानुमेया, फलं च प्रकटताख्यं विषयधर्मः सैव च वेद्यतेति कौमारिलं मतमाशङ्क्य प्रतिक्षिपति

वेद्यता च स्वभावेन
धर्मो भावस्य चेत्ततः ।
सर्वान्प्रत्येव वेद्यः स्या-
द्घटनीलादिधर्मवत् ॥ २१ ॥

घटनीलादीति भावप्रधानो निर्देशः । एवं हि भावस्य घटत्वं संनिवेशो नीलत्वं रूपम्, आदिग्रहणात्कार्यत्वकारणत्वादीत्येवमादयो धर्मा यथा सर्वान्प्रत्यविशिष्टास्तथा वेद्यताख्यो धर्मो भवेदित्यन्धाद्यभावः प्रसज्येत सर्वे च सर्वज्ञाः स्युः ॥ २१ ॥

ननु नियतप्रमातृबुद्धिजन्यत्वात्कंचिदेव प्रति वेद्यत्वं स्यात् न सर्वान्प्रति,—इति चेन्नैवम्, एवमपि हि यथा कुविन्दजन्यः पटो न तमेव प्रति सर्वाविशेषात् तथा वेद्य-

